सह मातृभिः हनूमता च सह। अयं नत्रः अनुद्धतः 'समीपं मे नाथ आगतः' इति तूर्याणां निःस्वनेन सकलं लोकं मार्गप्राप्तं समापूरयन् व्याप्नुवन्। करिणां च गिरीन्द्रसदृशाम्। '४२७ त्यदादिषु दृशोः—।३।२।६०।' इति चकारात् क्विन्। विक्रान्तैः पादन्यासैः क्ष्मां कम्पयन् सर्वतो विधूनयन्। 'क्ष्मापयन्' इति पाठान्तरम्। तत्र '२५७०। अर्तिह्री-।७।३।३६।' इत्यादिना पुक्। सम्प्राप्तः रामसमीपमित्यर्थः॥

१६२०—अथ स-सम्भ्रम-पौर-जना ऽऽवृतो
भरत-पाणि-धृतोज्ज्वल-चामरः॥
गुरु-जन-द्विज-बन्द्यभिनन्दितः
प्रविशति स्म पुरं रघु-नन्दनः॥ ३०॥

अथेत्यादि—अथ भरतसम्प्राप्त्यनन्तरं रघुनन्दनो रामः ससम्भ्रमेण सादरेण सहर्षेण पौरजनेनावृतः। भरतपाणिना धृतमुज्ज्वलं चामरं यस्य। गुरुजनेन द्विजैर्वन्दिभिश्च स्तुतिपाठकैरभिनन्दितो ऽभिष्टुतः सन् पुरमयोध्यां प्रविशति स्म प्रविष्टः॥

१६२१—प्रविधाय धृतिं परां जनानां
युव-राजं भरतं ततोऽभिषिच्य॥
जघटे तुरगा ऽध्वरेण यष्टुं
कृत-सम्भार-विधिः रतिः प्रजानाम्॥३१॥

प्रविधायेत्यादि—प्रविश्य च पुरं प्रजानां पतो रामः जनानां धृतिं प्रीतिरूपचेतोवृत्तिं परामुत्कृष्टां प्रविधाय कृत्वा भरतं च युवराजमभिषिच्य ततोऽनन्तरम् तुरगाध्वरेणाश्वमेधेन यष्टुं जघटे चेष्टितवान्। कृतसम्भारविधिः संभ्रियन्त इति सम्भारः द्रव्यगण इत्यर्थः। कृतोऽनुष्ठितः सम्भारस्य विधिरितिकर्तव्यतालक्षणो येन स इति॥

नायकाभ्युदयान्तं महाकाव्यमिति परिसमापयन् तत्र जयमिच्छता अस्मिन्नादरः कर्तव्य इति दर्शयन्नाह—

१६२२—इदमधिगत-मुक्ति-मार्ग-चित्रं
विवदिषतां वदतां च सन्-निबन्धात्॥

---

१—द्रुतविलम्बितवृत्तम्। 'द्रुतविलम्बितमाह नभौ भरौ।' इति ९

जनयति विजयं सदा जनानां
युधि सुसमाहितमैश्वरं यथा ऽस्त्रम्.॥ ३२॥

इदमित्यादि—इदं महाकाव्यम्। उक्तेर्वचनस्य यो मार्गः पन्थाः सुसंस्कृत-शब्दलक्षणः प्रपञ्चितः तेन चित्रं विस्मयनीयम्। सुसमाहितं अलङ्कारयुक्तम्। अधिगतं परिज्ञातं सज्जनानां विवदिषतां वक्तुमिच्छतां वदतां च वक्तुं प्र[illegible]-नानां सदा विजयं जनयति। संनिबन्धात् शोभनबन्धात्कारणात। यथास्त्रमै-श्वरं पाशुपतम्। अधिगतमुक्तिमार्गं अधिगतः प्राप्तः प्रज्ञातो मोचनमार्गः क्षेपण-मार्गो येन। चित्रं नानावर्णकेन चित्रितत्वात्। सुसमाहितं युधि संग्रामे विजयं विदधाति तद्वत्॥

तस्मादादरः कर्तव्य इति तत्रापि य एव व्याकरणमधीतवान् तस्यैवात्रादरो युक्त इति दर्शयन्नाह—

१६२३—दीप-तुल्यः प्रबन्धो ऽयं शब्द-लक्षण-चक्षुषाम्॥
हस्ता ऽमर्ष इवा ऽन्धानां भवेद् व्याकरणादृते. ३३

दीपतुल्य इत्यादि—अयं प्रबन्धो महाकाव्यसंज्ञकः। प्रबध्यते विरच्यत इति कृत्वा। शब्दलक्षणमेव चक्षुर्येषां तेषां दीपतुल्यः। अत एवैत[illegible]धि-गमात् स्वातन्त्र्येणान्यानपि शब्दान् प्रयोक्तुं क्षमत्वात्। व्याकरणादृते विना हस्ता-मर्ष इवान्धानां हस्तामर्ष इवावबोधः यथा अन्धानां हस्तेन घटपटादिवत्। स्वपरामृश्यसंस्थानमात्रपरिज्ञानं यथावस्थितस्वरूपपरिज्ञानं एवमनधीतव्याकर-णानां न शब्दस्वरूपपरिज्ञानं अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतोऽप्यन्यशब्दप्रयोग इति॥

एवं च कृत्वा विदुषो ऽनुरुध्यमानेन मयेदं काव्यं कृतमिति दर्शयन्नाह—

१६२४—व्याख्या-गम्यमिदं काव्य-
मुत्सवः सु-धियामलम्,॥
हता दुर्-मेधसश् चा ऽस्मिन्
विद्वत्-प्रिय-तया मया.॥ ३४॥

व्याख्यागम्यमित्यादि—व्याख्यागम्यं व्याख्यानाद्विना बोद्धुं न शक्यते। किमर्थमीदृशं कृतमिति चेत् उत्सवः सुधियामलं शास्त्रे क्षुण्णबुद्धीनां परं प्रमोदो जायते। एवं च सत्यस्मिन् काव्ये विषयभूतदुर्मेधसो व्याकरणबाह्याः मया हता हत लक्षणेताः। तस्माद्विद्वत्प्रियतया विद्वांसः प्रिया यस्य मम विद्वत्प्रियः तद्भाव-हत पाठान्तरं हेतुभूतयेति॥

सेनेदं काव्यं कृतं तद्दर्शयन्नाह—

१६२५—काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेन-नरेन्द्र-पालितायाम्, ॥
कीर्तिरतो भवतान् नृपस्य तस्य,
प्रेमङ्करः क्षिति-पो यतः प्रजानाम् ॥ ३५ ॥

इति भट्टि-काव्ये द्वाविंशतितमः सर्गः ॥
समाप्तश्चायं भट्टि-काव्य-ग्रन्थः ॥

काव्यमित्यादि—मयेदं काव्यं विहितं कृतम्। श्रीधरसूनुना नरेन्द्रनाम्ना नृपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्याम्। अत एव काव्यविधानाय या कीर्तिः सा तस्यैव राज्ञो भवतान्। आशिषि तातङ्। यतः प्रजानां प्रेमकरः प्रेमानुकूलः। आनुलोम्ये टः ॥

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य महावैयाकरणस्य कृतौ रावणवधे महाकाव्ये तिङन्तकाण्डे लक्षितनाम्नो नवमपरिच्छेदस्य जटीश्वरो जयदेवो जयमङ्गल इति च नामभिस्त्रिभिः सुप्रसिद्धस्य अनेकशास्त्रव्याख्यानकृतो टीकायां काव्यस्य 'अयोध्या-प्रत्यागमनं' नाम द्वाविंशः सर्गः ॥

॥ जयमङ्गलकृता टीका समाप्ता ॥



